**अस्य वक्षः कृणुतात्** कुरुत। **प्रशसा** द्विवचनस्य सुपां सुलुक्[1] इत्याकारः, प्रकर्षेण शस्यते हन्यतेऽनेनेति प्रशः शस्त्रमुच्यते[2]। स्वधितो वा शस्त्राकारा-वित्येके। अथवा प्रशस्तौ **बाहू कृणुत** इत्यनुषङ्गः सर्वत्र। **शला दोषणी** शलाकाकारे दोषणी दीर्घ इत्यर्थः। **कश्यपेवांसा** कश्यपेवांसौ। **अच्छिद्रे श्रोणी** साकल्यमेवाच्छिद्रत्वम्। **कवषोरू** कवषा [काराव्] ऊरू **स्रेकपर्णा-ऽष्ठीवन्ता** स्रेकः करवीरः तस्य पर्णाकारावष्ठीवन्तौ तौ च कृत्स्नावित्यर्थः। **षड्विंशतिरस्य वङ्क्रयः** पर्शवः ता **अनुष्ठ्या** अनुष्ठाने यत्नेन कृत्स्ना **उच्च्यावयतात्** उत्कृन्तत। एवं **गात्रं गात्रमस्यानूनं [कृणुतात्]** अनतिरिक्तं च कृणुत। **ऊवध्यगोहम्** भक्षितं तृणादिकं यदजीर्णं पशोरुदरे तिष्ठति तदूवध्यम्, तस्मिन् गृह्यते अच्छाद्यते स ऊवध्यगोहः, तं च **पार्थिवं** पृथिव्यां भवं **खनतात्** कृतन्त। **अस्ना** असृक्शब्दस्य लोहितवचनस्य पद्[3] आदिसूत्रेण असन्नादेशः, अस्ना लोहितेन **रक्षः संसृजतात्** संयोजयत, तद्धि रक्षसां भागः। **वनिष्ठुमस्य** वपासमीपे सन्तं वपाखनने **मा राविष्ट** मा राविष्ट। **ऊरुकम्** विस्तीर्णं वपालक्षणं[4] चैतदित्येवं **मन्यमानाः**, एवं च कुर्वताम् **नेत्** इच्छब्दो-ऽवधारणार्थः **न इत्** नैव **वः** युष्माकं **तोके तनये** द्वे अप्येते अपत्यनाम्नी[5], पौनरुक्त्यपरिहारार्थं तोकशब्देन पुत्रोऽभिधीयते तनयशब्देन च पौत्रः, बह्वर्थमेकवचनम्, पुत्रेषु पौत्रेषु च पुत्राणां पौत्राणां च मध्ये **रविता** शब्दकरः **रवत् रु शब्दे** शब्दयिष्यति। हे **शमितारः** एतज्ज्ञात्वा हे **अध्रिगो** प्रदर्शनार्थ-मिदमध्रिगुग्रहणं, अध्रिगुप्रभृतयः शमितारः **शमीध्वम्** शमयत **सुशमि शमीध्वम्** शमितं च शमयत मा शङ्कां कुरुध्वं हिंसेति। धर्म एव सा हिंसा शास्त्रेण[6] विहितत्वात्, अस्य च पशोरुत्कर्षो भवति। तथा च श्रूयते—

> **यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः।**[7] इति।
> **हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति**[8] इति च॥

—:०:—

---

१. अ० ७।१।३९॥ २. अयं पाठः स्कन्देन 'केचित्' पदेन स्मृतः, उत्तरः 'अपरे' पदेन। द्र०। निरु० टीका भाग २, पृष्ठ ३३२॥ ३. अ० ६।१।६३॥

४. वररुचेरिदं व्याख्यानं मीमांसाशाबरभाष्यसम्मतम्। द्र० मीमांसाभाष्य ६।४।२२॥ सायणेन तु 'उरूक' पदस्य उलूकपक्षिसदृशम्' इति व्याख्यानं कृतम्। द्र० तै० ब्रा० ३।६।६॥ ५. निघ० २।२॥

६. द्र० निरु० समु० पृ० ६७ टि० २॥

७. मनु० ५।४०॥ ८. ऐ० ब्रा० २।१४॥

एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः ।
एभिर्वर्धास इन्दुभिः[1] ॥७५॥

इत्याह्वानम् (२)। भारद्वाजस्यार्षम्। [आ] आकारः सन्निकर्षार्थः। आ इहि आगच्छ अस्मद्यज्ञमिति शेषः। उ उकारः पदपूरणः। सु ब्रवाणि शोभनं सूनृतं वचनं ब्रवाणि वदानि [ते] त्वद्गुणसंयुक्तं स्तुतिशेषः। अत एव हे अग्ने......त्वं तेभ्यः शृणु इत्यभिप्रायः। कस्मादिति चेत्? यस्माद् इत्था इत्थेति सत्यनाम[2], सत्यवचनमस्मदीयं सत्यरूपत्वात् तुष्टिकरमित्यभिप्रायः। अन्येषां तु इतराः असत्याः सत्याद् विपरीतवृत्तयः गिरः वाचः [वचनं] विपरीतत्वान्न प्रीतिकरमित्यभिप्रायः। श्रुत्वा चानन्तरं एभिः तात्तीयसवनिकैः इन्दुभिः सोमैः वर्धासे पञ्चमो लकारः वर्धासि वर्धस्व। एतदुक्तं भवति—'स्तुतिभिः स्तूयमानः पीत्वा च सोमं [वीर्यं] वृद्धः सन् देवद्विषो जहीत्याहूयसे' इति।

—:०:—

नकिरिन्द्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन् ।
नकिरेवा यथा त्वम्[3] ॥७६॥

इति स्तुतिः (३)। वामदेवस्यार्षम्। गुणगुणिसम्बन्धप्रतिपादनं स्तुतिरुच्यते। [नकिः] नकिरिति निरित्येतस्य स्थाने प्रतिषेधवचनस्याकच्प्रत्यायन्तस्यैतद् रूपम्, नास्तीत्यर्थः हे इन्द्र त्वत् त्वत्तः उत्तरः उत्कृष्टः देवेष्वित्यर्थः। कुत एतत्? इन्द्रो वै देवानामोजिष्ठो बलिष्ठः[4] इति श्रुतेः। किं च न ज्यायान् [अस्ति] ज्यायानपि नास्ति कुतः? महत्त्वयोगात्। हे वृत्रहन् वृत्रमसुरं त्वष्टुः पुत्रं मेघ्यधपरिपक्व (?, मेघं च परिघ्नन्)। किं वहुना नकिरेव यथा त्वम् यादृशोऽसि त्वं तादृशोऽपि नास्ति। त्वत्तुल्योऽपि न कश्चित् त्रैलोक्ये विद्यत इत्यर्थः॥

—:०:—

१. ऋ० ६।१६।१६॥
२. निघ० ३।१०॥
३. ऋ० ४।३०।१॥
४. ऐ० ब्रा० ७।१६॥

मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत् स तस्य ।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी[1] ॥७७॥

इति निन्दा (४) । भिक्षोरार्षम् । मोघं व्यर्थं विफलम् अन्नं विन्दन्ते लभते भुङ्क्ते इत्यर्थः । अप्रचेताः अप्रज्ञः प्रकर्षेणाजानन् धर्ममित्यर्थः । सत्यं ब्रवीमि यदेतदुक्तं तत् सत्यमेव अथ वध······धारणार्थः वर्धयति[2] प्राणान् इति वधः वज्र एव स अन्नलाभः अभ्यवहारः [तस्य] अभ्यवहर्तुः । तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्त्तव्यः उत्तरार्धंर्चे योजनीयः । [यः] नार्यमणं पुष्यति अरीणां भयान्निर्हन्तारमग्निं न पुष्यति नार्चयति नाग्नौ जुहोतीति वैश्वदेवादिकं न करोतीत्यर्थः । नो सखायम् नापि सखिभूतमतिथिं पूजयति । केवलाघो भवति अघमिति पापनाम, आङ्पूर्वाद्धन्तेरुपसर्गस्य ह्रस्वत्वेन हकारस्य च घत्वेन अघम्[3] आभिमुख्येन हन्ति तत् कर्त्तारं कदाचित्, केवलं पापरूपो भवति केवलादी केवल शब्दोऽसहायवचनः केवलभोजी असहाय-भोजीत्यर्थः । स मोघमन्नं विन्दते त[स्मा]त् तस्य वधो भवति । इति सम्बन्धः । कुत एतत् ? अहमन्नमन्नमदन्तमद्मि[4] इति मन्त्रलिङ्गात् । मन्त्र-लिङ्गमूलं यस्य चाग्नौ न क्रियते यस्य च अन्न······न भोक्तव्यमित्यर्थः ॥

—:०:—

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्[5] ॥७८॥

इति संख्या (५) । दीर्घतमस आर्षम् । गौरीः छान्दसत्वात् सुलोपा-भावः । वाङ्नामैतत्,[6] वाङ्मध्यमस्थाना मेघजन्मा न्तनपि अलक्षणो-पचार (?) अधिष्ठात्रीत्युच्यते, सा मिमाय माङ् माने मिमीते कृत्स्नं जगद् इति शेषः । तक्षती कुर्वती सलिलानि वृष्टिलक्षणानि, तक्षतिः करोतिकर्मा[7] कुर्वती एकपदी पदं स्थानमाश्रयमित्यर्थः । किं तत् ? अन्तरिक्षम्, तद्धि तस्याः स्थानम्, तद् यस्याः सा एकपदी । द्विपदी मध्यमेन [चादित्येन च][8]

---

१. ऋ० १०।११७।६॥
२. हिंसयति इत्यर्थः ।
३. द्र० निरु० ६।११॥
४. तै० उ० भृगु० १०।६॥
५. ऋ० १।१६४।४१॥
६. निघ० १।११॥
७. अनुपलब्धमूलमिदम् ॥
८. द्र० स्कन्दनिरुक्तटीका ११।४०॥

सहिता वृत्रवधमाचरन् वृष्टिकर्मणि साहाय्यमस्याः प्रतिपद्यते। सा चतुष्पदी अष्टापदी दिग्भिः, दिशोऽवकाशदानेनास्य वृष्टिकर्मणि सहकारिकारणत्वं प्रतिपद्यन्ते। अष्टापदी अवान्तरदिशश्च ताद्वैवं तद्धर्माणः (?)। नवपदी ताभिश्चादित्येन च, असावादित्यो न्यङ्रश्मिभिः पर्यावर्तते अथ वर्षति[1] इति वचनात् वृष्टिकर्मणि साहाय्यमस्याः प्रतिपद्यते, तत एवमुच्यते नवपदी, बभूवुषी एकपद्यादिक्रमेण वर्धमाना इत्यर्थः सहस्राक्षरा सहस्रमिति वहुनाम[2] अक्षरमित्युदकनाम[3] अक्षयत्वात् तथा हि श्रूयते—तस्मादद्यमानाः पीयमाना आपो न क्षीयन्ते[4] इति। सहस्राक्षरा वहूदका क्रमेणोपचीयमानेन वर्षणावयन्त धारात्मना कृत्स्नं जगद् व्याप्नोतीत्यर्थः। परमे प्रकृष्टे व्योमन्, सुपां सुलुक्[5] इति सप्तम्येकवचनस्य लुग् द्रष्टव्यः, व्योमनि अन्तरिक्षे स्वस्मिन् स्थाने स्थितेति वाक्यशेषः।

—:०:—

तच्चक्षुर्देवहितं शुक्रमुच्चरत्।
पश्येम शरदः शतं जीवेम शरदः शतम्[6]॥

इत्याशीः (६) अयं मन्त्रो द्वितीये कल्पे व्याख्यातः[7]॥

—:०:—

बभ्रुरेको विषुणः सूनरो युवाञ्ज्यङ्क्ते हिरण्ययम्।
योनिमेक आ संसाद द्योतनोऽन्तर्देवेषु मेधिरः[8] ॥७९॥

इति कर्म (७)। काश्यपस्यार्षम्। सोमः स्तूयते, उत्तरेणार्धर्चेन वैद्युतोऽग्निः। बभ्रुः वभ्रुवर्णः सोमः एकः असहायः विषुणः विषमः विषमशब्देन समर्थ उच्यते, एक एव कर्मसु समर्थ इत्यर्थः। सूनरः शोभनाः कर्त्तव्यपदार्थज्ञा नरा मनुष्या अध्वर्य्वादयो यस्य सम्वन्धित्वेन सन्ति स सूनरः शोभननरः।

---

१. तै० सं० २।४।१०॥ निरु० ७।२४॥
२. निघ० ३।१॥
३. निघ० १।१२॥
४. अनुपलब्धमूलमिदम्॥
५. अ० ७।१।३९॥
६. ऋ० ७।६६।१६॥
७. निरु० समु० पृ० ३६॥ अत एवास्यात्र गणना न कृता।
८. ऋ० ८।२९।१॥

पदकारेणैतत् पदं नावगृहीतं तथापि भाष्यकारवचनात् पदकारमनादृत्यैतन्निरुक्तम्[1]। युवा यौतेः कनिन्प्रत्ययान्तस्य प्रयौति मिश्रयति कर्माणि प्रातःसवनादीनि, इतरोऽपि युवा तरुणः स्यात् क्षिप्रं कर्माणि मिश्रयति अञ्जि अनक्ति व्यञ्जनशीलः अङ्क्ते अभिव्यञ्जयति उत्पादयतीत्यर्थः। हिरण्ययम् हिरण्यशब्देनोदकमुच्यते। कुत एतत् ? उदकमपि हिरण्यमुच्यते[2] इति भाष्यकारवचनात्। हिरण्यमुदकसंघातम्। एतदुक्तं भवति—इन्द्रादिदेवतातृप्तिद्वारेण सर्वप्राणिव्यञ्जनहेतुभूतमुदकं सोमः सम्पादयतीत्यर्थः। योनिम् योनिशब्देनान्तरिक्षमुच्यते, अन्तरिक्षमेव एकः वैद्युतः योनिम् आससाद ज्ञातवान् प्राप्तवानित्यर्थः। द्योतनः, द्युत दीप्तौ दीप्यमानः अन्तः अन्तः शब्दो मध्यमवचनः देवेषु मध्यमस्थानेषु वाय्वादिषु मेधिरः मेधाशब्दो धनवचनः,[3] प्रज्ञावचनोऽप्यस्ति[4], मेधाशब्दान्मत्वर्थीय इरच्प्रत्ययः। मेघोदरगतेनोदकलक्षणेन धनेन धनवान् वा, प्रज्ञावान् वा प्रज्ञाहेतुभूतः अतिबहुलतिमिरावकुण्ठितायां रात्र्यां घटपटादिभावानां प्रकाशयिता इत्यर्थः॥

—:o:—

अ॒हं भु॒वं वसु॑नः पू॒र्व्यस्पति॑र॒हं धना॑नि॒ सं ज॑यामि॒ शश्व॑तः।
यां ह॑वन्ते पि॒तरं॒ न ज॒न्तवो॒ऽहं दा॒शुषे॒ वि भ॑जामि॒ भोज॑नम्[5] ॥८०॥

इति कत्थना (८)। अर्थाभिव्यक्तयर्थमस्यां प्रथमं तावदाख्यानं प्रस्तौति—'प्रजापतेर्दुहिता विकुण्ठा नामासुरक्षेत्रे सम्भूता पुत्रमिन्द्रमिच्छन्ती किल बहुतपश्चकार। तस्यास्तपसो महानुभावादिन्द्रत्वभयाच्च देवैश्वर्यमवहाय इन्द्र एव पुत्रो जज्ञे। स जन्मान्तरितरोहितपूर्वस्मरणानुसंधानः सन् सप्तगुर्नामा[6] ऋषिभिरभिष्टुतो हृष्टात्मा च महत्त्वानुकीर्त्तनपुरःसरमेतेन

---

१. निरुक्तसमुच्चयकृत् सर्वत्र भाष्यकारपदेन निरुक्तकारं यास्कं निर्दिशति। परमत्र भाष्यकारनाम्ना कस्य मतमुद्धरतीति न विज्ञायते। यतो हि सूनरपदस्य निर्वचनं निरुक्ते न क्वचिदुपलभ्यते॥

२. इदमपि वचनं निरुक्ते नोपलब्धमस्माभिः॥ ३. निघ० २।१०॥

४. यास्केन पदमिदं प्रज्ञानामसु न पठितम्। कौत्सव्यनिघण्टौ तु बुद्धिनामसु [खण्ड० ८४] पठ्यते॥ ५. ऋ० १०।४८।१॥

६. बृहद्देवतासर्वानुक्रमण्योस्तु सप्तगुर्नाम ऋषेरस्ति, येनायं प्रबोधितः। यथा त्वत्र पाठस्तथा सप्तगुर्नाम वैकुण्ठस्य विज्ञायते, ऋषिभिश्च बहुभिः (नैकेन) स प्रबोधितः।

श्लाघते[1]" अतः(?) प्रत्यक्षार्थीयोऽयं मन्त्र, उत्तमपुरुषयोगात्, अहमिति चैतस्य सर्वनाम्नः श्रवणाच्च[2]। इन्द्र एवर्षिः, इन्द्र एव देवता। कुत एतत्? **उत्तमस्य तु वर्गस्य य ऋषिः सैव देवता**[3] इति वचनात्। **अहम्** इत्यमात्मानं साभिनयं दर्शयति **भुवम्** नेदं पृथिवीनामधेयस्य भूशब्दस्य रूपम्। किं तर्हि? भवतेर्लुङि उत्तमपुरुषैकवचने छान्दसत्वादडभावो ह्रस्वत्वं[4] च [अभूवम्। लङि तु] अकारस्योत्वं च अभवं भवामि। **वसुनः** वस्विति धननाम[5] धनस्य सर्वस्य **पूर्व्यः** पुराणनामेदं पुराणो नित्यं **पतिः** स्वामी **अहम्** एव धनानि, **प्रधन** इति संग्रामनाम,[6] प्रशब्दलोपे द्वितीयाबहुवचनान्तमेतत् **संजयामि** सम्यक् बहुसुहृद्वधवर्जं जयामि। **शश्वतः** शश्वच्छब्दो बहुवचनः[7] बहून्, अथवा सञ्जयामि बह्वोः शत्रोरिति शेषः। **माम्** एव **हवन्ते** आह्वयन्ति सर्वे यजमानाः ज्योतिष्टोमादिषु कर्मसु। किमिव? **पितरं न** नशब्द उपमार्थः, पितरमिव **जन्तवः** मनुष्यनामैतत्, मनुष्याः सर्वकर्मसु। **अहम्** एव **दाशुषे** दाश्वानिति शाकपूणिना नैरुक्ताचार्येण यजमाननामसु पठ्यते[8] हवींषि दत्तवते यजमानगणाय, **विभजामि** ददामि **भोजनम्** धननामैतत्[9] धनं यो यावद्दाति हविर्भाग् बहु वा अहमपि तस्मै तावदेव ददामीत्यर्थः। कुतः? "**यादृगिव वै देवेभ्यः करोति तादृगिवास्मै देवाः कुर्वन्ति**[10]" इति श्रुतेः॥

—:०:—

**पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिः।**
**पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम[11]॥८१॥**

इति **प्रश्नः** (९)। दीर्घतमस आर्षम्। विज्ञानमयं क्षेत्रं पृच्छति ऋत्वि-

---

१. तुलना—बृहद्देवता ७।४२-५८॥ सर्वानुक्रमणी १०।४८। पृ० ३८॥
२. निरुक्ते त्विदं लक्षणमाध्यात्मिक्यानामृचामुच्यते द्र० निरु० ७।२॥
३. अनुपलब्धमूलमिदम्॥
४. तुलना कार्या-स्कन्दनिरुक्तटीका ७।२ पृष्ठ १३॥ निरुक्तसमुच्चय पृष्ठ ५४।
५. निघ० २।१०॥ ६. निरु० ९।२३॥ ७. निघ० ३।१॥
८. द्र० स्कन्दनिरुक्तटीका भा० १ पृ० ४९॥ ९. निघ० २।१०॥
१०. ऐ० ब्रा० ३।६॥ ११. ऋ० १।१६४।३४॥

गणो यजमानम्[1]। पृच्छामि त्वा त्वां परमम् प्रकृष्टं अन्तम् अन्तशब्दः प्रदेशवचनः पृथिव्याः अतिशयेन सारभूतं प्रदेशत्वात्। पृच्छामि पृच्छते-र्द्विकर्मकत्वस्मरणात्[2] द्विकर्मकत्वप्रयोगः [यत्र]यज्ञशब्दो यच्छब्दार्थे द्रष्टव्यः, यः भुवनस्य भूतजातस्य नाभिः नाभिशब्देनाश्रय उच्यते। तथा च—नाभिः संहननात् प्रदेशवचनः[3] [इति] निरुक्तम्। सन्नद्ध एतेनाङ्गेन कृत्स्नं शरीरं प्राणधारणत्वात्, तं त्वा पृच्छामीति सम्वन्धः। पृच्छामि त्वा त्वां वृष्णः वर्षयितुः अश्वस्य रेतः। पृच्छामि सर्वत्राध्वर्य्वादिरूपायाः वाचः परमम् उत्कृष्टं व्योम स्थानम्॥

—:०:—

इ॒यं वेदि॒ः परो॒ अन्त॑ः पृथि॒व्या अ॒यं य॒ज्ञो भुव॑नस्य॒ नाभि॑ः।
अ॒यं सोमो॒ वृष्णो॒ अश्व॑स्य॒ रेतो॑ ब्र॒ह्मायं वा॒चः प॑र॒मं व्योम॑[4] ॥८२॥

[इति]व्याकरणं प्रतिवचनम् (१०)। पूर्वस्मिन् मन्त्रे चत्वारः प्रश्नाः कृताः। तेषामानुपूर्व्येण चत्वारि प्रतिवचनानि अनेन मन्त्रेण प्रतिपाद्यन्ते। इयं वेदिः यागभूमिः परः उत्कृष्टः अन्तः सारभूतं पृथिव्याः। कुत एतत्? देवयजनं वै वरं पृथिव्याम्[5] इति श्रुतेः। अयं सोमः ग्रहचमसादिपात्रस्थः वृष्णः वर्षयितुः अश्वस्य व्याप्तुरिन्द्रस्य रेतः। कथम्? अयमेव हि पीतो रसादिक्रमेण इन्द्रस्य रेतो वीर्यं मदोत्सेधमापादयति। ब्रह्मायम् अयमेव हि ब्रह्मा ब्रह्मासनमध्यासीनः वाचः सर्वस्या अध्वर्य्वादिरूपायाः परमम् उत्कृष्टं व्योम स्थानम्। कथम्? ब्रह्मा परिवृढः श्रुततः[6] इति वचनात्, त्रय्या विद्यया ब्रह्मत्वं कुर्यात्[7] इति श्रुतेः। यो हि निगमनिरुक्तव्याकरणादिकलाप-युक्तः स एव ब्रह्मत्वं कर्त्तुमर्हति नान्य इति॥

—:०:—

१. कात्यायनश्रौतसूत्रे २०।७।१४-'यजमानोऽध्वर्युं पृच्छामि त्वेति' इति श्रूयते।
२. महाभाष्य० १।४।५१॥
३. निरुक्ते [४।२१] तु 'नाभिः संहननात्' इत्येव पाठः॥
४. ऋ० १।१६४।३५॥
५. तुलना—'देवयजनं वै वरं पृथिव्यै'। ऐ० ब्रा० १।१३॥ ६. निरु० १।८॥
७. तुलना—'अथ केन ब्रह्मत्वं क्रियते इति त्रय्या विद्यते ब्रूयात्' इति। ऐ० ब्रा० ५।३३॥

इदमापः प्र वहत यत् किञ्च दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम्[1] ॥

इति शोधितः (११) । अयमपि मन्त्रो द्वितीये कल्पे[2] व्याख्यातः ॥

—:०:—

इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि[3] ॥८३॥

इति विकल्पः (१२) अनेकवाक्यकल्पनया विकल्पः । देवताविकल्पो वा "वायुरिति नैरुक्ताः", "सूर्य इति याज्ञिकाः[4]" । शक्तिर्नामा वशिष्ठपुत्रः तस्यार्षम्[5] ।

प्रथमं तावद् याज्ञिकमतेन व्याख्यायते—इन्द्र यो दीपयति रश्मिद्वारेणानुप्रविश्य भूतानि इति इन्द्र आदित्य उच्यते । असौ वा आदित्य इन्द्रः[6] इति च श्रुतेः । [ हे ] इन्द्र आदित्य [ क्रतुम् ] क्रतुरिति कर्म[7] वा प्रज्ञा वोच्यते[8] । कर्म अतिरात्रयागफललक्षणं [ नः ] अस्माकम् आभर आहर पिता पुत्रेभ्यो यथा पिता पुत्रहितेच्छया कर्मादृष्टानुश्राविकं सुखसाधनमारभेत तद्वत्, किञ्च शिक्ष शिक्षतिर्दानकर्मा देहि नः अस्मभ्यमन्यदप्यभिलषितम् अस्मिन् हे पुरुहूत पुरुस्तुत यामनि यातेर्मनिन् प्रत्ययः, यापयति स्वर्गमास्थानमिति यामशब्देन यज्ञोऽभिधीयते । यज्ञे जीवाः मत्वर्थीयोऽच्प्रत्ययः जीवन्तः,

---

१. ऋ० १०।९।८॥ २. निरु० समु० पृ० ४८॥

३. ऋ० ७।३२।२६॥

४. द्र०—निरु० समु० पृ० १ टि० १॥ निरुक्तसमुच्चयकृता नैरुक्तानां याज्ञिकानां च मतं कुतः संगृहीतमिति न विद्मः । शौनककात्यायनाभ्यां त्वस्य मन्त्रस्येन्द्रो देवतेत्युक्तम् । द्र०—बृ० दे० ५।१४१; सर्वा० ७।३२॥

५. पूर्वार्धर्चस्य वसिष्ठपुत्रः शक्तिर्ऋषिः, उत्तरार्धर्चस्य वसिष्ठ इति शाट्यायनब्राह्मणम् । वसिष्ठ एवर्षिरिति ताण्ड्यब्राह्मणम् । तथा चानुक्रान्तं कात्यायनेन—"सौदासैरग्नौ प्रक्षिप्यमाणः शक्तिरन्त्यं प्रगाथमालेभे, सोऽर्धर्च उक्तेऽदह्यत, तं पुत्रोक्तं वसिष्ठः समापयतेति शाट्यायनकम् । वसिष्ठस्यैव हतपुत्रस्यार्षमिति ताण्डकम्" इति सर्वा० ७।३२॥

६. अनुपलब्धमूलमिदम् ॥ ७. निघ० २।१॥ ८. निघ० ३।९॥

चिरमपि जीवन्त इत्यर्थः। ज्योतिः आभ्यन्तरम् अशीमहि अशू व्याप्तौ व्याप्नुयाम, त्वया सायुज्यं गमिष्याम इत्यभिप्रायः॥

नैरुक्तपक्षेऽपि—इन्द्र दानादिगुण इन्द्रो मध्यस्थानो वायुरुच्यते। हे इन्द्र वायो क्रतुम् वृष्टिलक्षणं [नः] अस्माकम् आभर आहर पिता पुत्रेभ्यो यथा धननिमित्तं कर्म शिक्ष देहि नः अस्मभ्यं स्तोतृभ्यः कामानिति शेषः। अस्मिन् हे पुरुहूत पुरस्तुत यामनि यापयति क्षपयति भूतानि यामञ्छब्द··· ···कालवचनः। काले वर्षाख्ये त्वद्दत्तेनोदकेन जीवाः जीवन्तो ज्योतिः परमात्माख्यम् अशीमहि। तेन सायुज्यं गमिष्याम इत्यभिप्रायः॥

—:०:—

यदिन्द्राहं यथा त्वमीशीय वस्व एक इत्।
स्तोता मे गोषखा स्यात्[1] ॥८४॥

इति संकल्पः (१३)। गोषूक्तेर्वाश्वसूक्तेर्वार्षम्। [यद्] यदि हे इन्द्र अहं यथा त्वम् सर्वस्य धनस्येश्वरोऽभूस्तथाहम् ईशीय ईश्वरो भवानि वस्वः वसुनो धनस्य सर्वस्य एक इत् इच्छब्दोऽवधारणार्थः, एक एव, तथा सति स्तोता मे मम गोषखा गवां सखा स्वामी स्यात् भवेत्। प्रदर्शनार्थमिदं गोग्रहणं गवादीनां धनानां पतिर्भवेत्। एतदुक्तं भवति—यदि त्वं सर्वेश्वरो मह्यं स्तोत्रे बहुधनं ददासि, अहमप्यभिलषितैरर्थैः स्तोतॄणां मनोरथं पूरयेयमिति संकल्पः।

—:०:—

सुदेवो अद्य प्रपतेदनावृत्परावतं परमां गन्तवा उ।
अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः[2] ॥८५॥

इति परिदेवना (१४)। उर्वश्या वियुक्तः पुरुरवा विललाप। सुदेव शोभनं देवनं क्रीडनं यस्य स सुदेवः, यथाभिलषितं परिभुक्तसर्वभोग इत्यर्थः। अद्य सम्प्रत्येव शिखरिशिखरमारुह्य प्रपतेत् प्रकर्षेण प्रमतिरसु (?, पतति असौ) अनावृत् आवर्तनमावृत् अनावर्तनं क्रियाविशेषणमेतत्। किमर्थम्? परावतम दूरं परमाम् परावतमत्यन्तं दूरं यमलोकमित्यर्थः, गन्तवै: गन्तुम्

१. ऋ० ८।१४।१॥ २. ऋ० १०।९५।१४॥

[उ] उकारः पादपूरणार्थः, गतश्वसन् **अध** अथशब्दपर्यायः, अनन्तरं **शयीत निर्ऋतेः** प्रलयाधिदेवतायाः **उपस्थे** अङ्के समीपसप्तम्येषा 'कूपे गर्ग कुलम्'[1] इति यथा। यमस्य समीपे प्रदेशे गत्वा शेते इत्यर्थः। शयितं च अध अनन्तरमेव **एनं वृकाः** विकर्त्तनगुणयुक्ताः तत्पुरुषाः **रभसासः** रभसशब्दो वेगवचनो मत्वर्थीयोऽच्प्रत्ययान्तो द्रष्टव्यः, वेगवन्तः **अद्युः** भक्षयेयुः। अथवोत्तरार्धर्चस्यान्यथा योजना—**अध** अनन्तरं **शयीत** निश्शेत इत्यर्थः, शयीत **निर्ऋतेः** निर्ऋतिः पृथिवीनाम[2] पृथिव्या **उपस्थे** सानुदेशे शयीत शयितं च **अध** अनन्तरमेव **एनं वृकाः** विकर्त्तनशीला[3] मृगाः **रभसासः** वेगवन्तः **अद्युः** भक्षयेयुः। तथापि युक्तो नाहं कष्टं जीवामीति धिङ्मामित्यभिप्रायः। एवमितिहासपक्षे योजना।

**नैरुक्तपक्षे तु**—पुरुरवा मध्यमस्थानो वाय्वादीनामेकतमः पुरु रौतीति पुरुरवाः, उर्वशी विद्युत् उरु विस्तीर्णमन्तरिक्षमश्नुते दीव्यत इति उर्वशी। वर्षाकाले विद्युति विनष्टायां तथा वियुक्तः स्तनयित्नुलक्षणं शब्दं कुर्वन् विलपति। **सुदेवः** शकिसद (?) **अद्य प्रपतेत्** अस्मात्स्थानादन्तरिक्षात् **अनावृत्** अनावर्तनं **परावतं परमां** अत्यन्तदूरं पृथिवीलोकं **गन्तवै** गन्तुं गतश्चापर्यन्त (?) धारात्मना [**अध**] अनन्तरं **शयीत निर्ऋतेः** पृथिव्याः **उपस्थे** उपगम्यापो यत्र तिष्ठन्ति स उपस्थः कटकादिप्रदेशः[4] तस्मिन् **अध** अनन्तरम् **एनम्** उदकात्मनावस्थितं **वृकाः** वृका ज्योतिष्काः[5] काले **अद्युः** भक्षयेयुरित्यर्थः। एवं नैरुक्तपक्षे योजना॥

औपचारिकोऽयं मन्त्रेष्वाख्यानसमयो नित्यत्वविरोधात्। परमार्थेन तु नित्यपक्ष एवेति नैरुक्तानां सिद्धान्तः[6]॥

—:o:—

---

१. तुलना—महाभाष्य० ४।१।४८॥ २. निघ० १।१॥

३. अत्र 'श्वाऽपि वृक उच्यते विकर्त्तनात्' इति निरुक्तम् (५।२१) अनुसन्धेयम्।

४. तडागादिरूपो निम्नप्रदेशः।

५. आदित्योऽपि वृक उच्यते (निरु० ५।२१) इति वचनात् वृक आदित्यः। अत्र बहुवचननिर्देशात् तद्रश्मयो गृह्यन्ते।

६. द्र० स्कन्दनिरु० टी० २।७८॥ दुर्ग० टी० पृ० ७४२॥

यत्ते॑ य॒मं वै॑वस्व॒तं मनो॑ ज॒गाम॑ दूर॒कम् ।
तत्त॒ आव॑र्तयामसी॒ह क्षया॑य जी॒वसे॑[1] ॥ ८६ ॥

इति—अनुबन्धः (१५)। अत्रैवं श्रूयते—"असमातिनाम्नो राज्ञः पुरोहिताभ्यां मायाविभ्यां [सुबधुः प्राणैर्वियोजितः। ततः] शोकसन्तप्तहृदया बन्ध्वादयस्त्रयो भ्रातरो मनसः पुनरावर्तनं जेपुः यत्ते यममिति सूक्तम्"[2] इति। यत् ते तव मन इति सम्बन्धः यमम् प्रेतराजं वैवस्वतम् आदित्यं, सावर्णी यमजीजनत्[3], तं वैवस्वतं मनः मनःशब्दो नात्रान्तर्यामी, प्रधानभूतः प्राण उच्यते। तथाहि श्रूयते—प्राणमुत्क्रामन्तं सर्वे प्राणा अनुक्रामन्ति"[4] इति। जगाम गतवान् दूरकम् मनसो विशेषणमेतत्, दूरेऽपि सन् प्राणिनां वृत्तान्तं केतति जानाति इति, दूरकं तत् ते तव आवर्त्तयामसि आवर्तयामः पुनरानेष्याम इत्यर्थः। किमर्थम्? इह लोके क्षयाय निवासाय जीवसे जीवितुं सुखं जीवनाय चेत्यर्थः॥

—।०।—

प्र॒या॒जान् मे॑ अनुया॒जाँश्च॒ केव॑लानू॒र्जस्व॑न्तं ह॒विषो॑ दत्त भा॒गम् ।
घृ॒तं चा॒पां पुरु॑षं॒ चौष॑धीनाम॒ग्नेश्च॑ दी॒र्घमायु॑रस्तु दे॒वाः[5] ॥८७॥

इति याच्ञा (१६) एवं तथा श्रूयते—"सौची[क]मग्निं विश्वेदेवा ऊचुः। हव्यं नो वहेति। सोऽग्निरब्रवीदभागोऽहं यज्ञे मृत्योश्च बिभेमीति। ते देवा पुनरब्रुवन्। अभिलषितं ब्रूहीति। ततो हविर्भागमविनश्वरमायुश्चायाचयत्[6] [इति]। प्रयाजान् मे मह्यम् अनुयाजाँश्च केवलान् अ[न]न्यदेवत्यान् मद्देवत्यान् [ए]वेत्यर्थः। सिंहावलोकनन्यायेन 'दत्त' इत्याख्यातमाकृष्टव्यम्, दत्त ऊर्जस्वन्तम् उर्क् शब्दोऽन्नवचनः[7], अन्नवन्तमन्नविकारं पुरोडाशं हविषो भागं दत्त घृतं च आज्यभागाख्यम् अपाम् विकारभूतमिति

---

१. ऋ० १०।५८।१॥
२. तु० बृ० दे० ७।८२-८७॥ सर्वा० १०।५६,५८॥ शाट्यायनकं च सायणन ऋ० १०।५७।१॥ व्याख्यानम् उद्धृतम्।
३. तुलना—निरु० १२।१०॥ ४. बृ० उ० ४।४।२॥
५. ऋ० १०।५१।८॥ ६. तु० बृ० दे० ७।६२॥ सर्वा० १०।२१॥
७. निघ० २।७॥

वाक्यशेषः । पुरुषं च [पुरु] बहुलकर्मं सुनोतीति पुरुषः सवनीय पशुरुच्यते । तेन विनीयन्ते सवनानि । तथा हि—वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने, अङ्गैस्तृतीयसवने प्रचरन्ति[1] इति वचनात् । तं च सवनीयम् ओषधीनाम् अत्तारमिति शेषः । अग्नेश्च मम दीर्घम् शाश्वतम् आयुरस्तु भवतु हे देवाः ॥

—:०:—

तव॑ प्र॒या॒जा अ॑नुया॒जाश्च॒ केव॑ल॒ ऊर्ज॑स्वन्तो ह॒विषः॑ सन्तु भा॒गाः ।
तवा॑ग्ने य॒ज्ञो३॑ऽयम॑स्तु॒ सर्व॒स्तुभ्यं॑ नमन्तां प्र॒दिश॒श्चत॑स्रः[2] ॥८८॥

इति प्रसवः—अभ्यनुज्ञा(१७)। एवमग्निना याचिता विश्वेदेवा प्रत्यूचुः । तव प्रयाजा अनुयाजाश्च केवलः देवतान्तररहिता ऊर्जस्वन्तः ऊर्क् शब्दो रस-वचनम् । हविषः सम्बन्धिनः सन्तु भवन्तु भागाः परिगणिताः । प्रार्थिताद-धिकमपि दद्मः, तव एव हे अग्ने यज्ञोऽयं सर्वः अस्तु यदि कामयसे । किंच तुभ्यम् तादर्थ्ये चतुर्थ्येषा त्वदर्थं नमन्ताम् प्रह्वी भवन्तु प्रदिशः प्रकृष्टा दिशः चतस्रः प्राच्याद्याः, सर्वासां च दिशां त्वमेवेश्वरो भवेद् इति प्रसादाति-रेकः कथ्यते । महतां हि प्रसादोऽनेकभद्र इति ॥

—:०:—

ओ चि॒त् सखा॑यं स॒ख्या व॑वृत्यां ति॒रः पु॒रू चि॑दर्ण॒वं ज॑ग॒न्वान् ।
पि॒तुर्नपा॑त॒मा द॑धीत वे॒धा अधि॒ क्षमि॑ प्रत॒रं दीध्या॑नः[3] ॥ ८९ ॥

इति संवादः (१८) । उक्तिप्रत्युक्तिरूपो भवो वादः संवादः इत्युच्यते । प्रथमं तावदैतिहासिकमतानुसारेणायं मन्त्रो व्याख्यायते । यमयम्योः संवाद-सूक्तम्, विवस्वतो दुहिता यमं भ्रातरं मदपरवशीकृता सर्वेन्द्रियप्रतिभोगार्थं चकमे ओ चित् आ उ ओ उकारः पदपूरणः, चिच्छब्दश्च । आकारो विवृत्या-मित्यनेन संबध्यते । सखायं यमं सख्या तृतीयैकवचनं प्रथमैकवचनस्य स्थाने सखी सती ववृत्याम् इत्येतच्छान्दसं रूपम् आभिमुख्येन कामये इत्यर्थः । तिरः क्रियाविशेषणमेतत् समयविरोधात् प्रच्छन्नवाक्यार्थसम्पादनार्थं यत्तच्छ-ब्दावध्याहार्यौ । यमहं कामये सोऽपि पुरु[पुरु]इति बहुनाम[4] चित् चशब्दार्थे

---

१. तु० शां० ब्रा० १२।६॥
२. ऋ० १०।५१।९॥
३. ऋ० १०।१०।१॥
४. निघ० ३।१॥

वहु च **अर्णवम्** अर्णशब्देनोकमुच्यते, मत्वर्थीयो वकारः **अर्णसो लोपश्च**[1] इति सकारलोपः । अर्णवं वहुरेतस्कमित्यर्थः । **जगन्वान्** गतवान् प्राप्तवान् प्राप्ताभिनवयौवन एवेत्यर्थः । अतः **पितुः स्वस्या** अपि वैवस्वतः **नपातम्** नपादित्यनन्तरायाः प्रजाया नामधेयम्[2] पौत्रमित्यर्थः । **आदधीत** कारणभूतं गर्भं मयीति शेषः । **वेधा** मेधावी **अधि क्षमि** अधीत्युपभोगे [क्षमि] छान्दसमेवैतद् रूपं, क्षमा पृथिवी तस्या उपरि पृथिवीलोक इत्यर्थः । **प्रतरम्** प्रकृष्टतरं पुत्रोत्पादनेन **दीध्यानः** दीप्यमानः । एवमैतिहासिकपक्षे योजना ॥

**नैरुक्तपक्षे** तु—यमी मध्यमस्थाना वाक् यमश्च मध्यमस्थानः । सा यमी वर्षाकाले मध्यमस्थानाभिमुख्येन **सखायं** सहस्थानयोगात् सखीत्यर्थः, कामयेयमहं कामयेत् (?) सोऽपि [**तिरः**] **तिरः सत इति प्राप्तस्य नामनी**[3] प्राप्तवर्षासमये [पुरु] वहुलम् [**अर्णवम्**] उदकभूयस्त्वं [**जगन्वान्**] गतवान् गतश्च स्वस्य **पितुः** आदित्यस्य, कथमादित्योऽस्य पिता ? उच्यते—आदित्यो रश्मिभिः पर्यावर्तमानो रसान् मध्यमायार्पयन् तं पतितोऽ (?; पातवान् अतोऽ)सावस्य पितेत्युच्यते । तस्यादित्यस्य **नपातम्** एकानन्तरत्वात् पौत्रस्थानीयमुदकसंघातम् **आदधीत** । **वेधा** विविधं वृष्टिप्रदानेन धाता धारयिता सर्वस्य जगतः **अधि क्षमि** पृथिव्या उपरि पृथिव्यामित्यर्थः । **दीध्यान**; ध्यै चिन्तायां चिन्तयन्, कथं नु नाम लोकः सुखं जीवेद् इति । एवं नित्यत्वाविरोधेन योज्यम् ।

—:०:—

**सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे ।**
**आदित्यान् विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम्**[4] ॥९०॥

इति **समुच्चयः** (१६) । अग्नेस्ताप[स]स्यार्षम् । **सोमं राजानमवसे** रक्षणायात्मनः, **अग्निं गीर्भिः** स्तुतिभिः **हवामहे** आह्वयामोऽभिष्टुयाम इत्यर्थः । **आदित्यान् विष्णुं सूर्यं ब्रह्माणं बृहस्पतिं च** । एतदुक्तं भवति—त्रिस्थाननिवासिनो देवान् वन्दामहे, तेऽपि नः प्रसीदन्तु भक्तानामभिलषितस्य प्रदातार इति ॥

—:०:—

१ अ० ५।२।१०९ वा० ॥ २. निरु० ८।५॥
३ निरु० ३।२०॥ तत्र 'नामनी' इति पदं नास्ति ॥
४. ऋ० १०।१४१।३॥

भोजायाश्वं सम्मृजन्त्याशुं भोजायास्ते कुन्या३ शुम्भमाना ।
भोजस्येदं पुष्कुरिणीव वेश्म परिष्कृतं देवमानेव चित्रम्[1] ॥९१॥

इति प्रशंसा (२०)। प्रजापतेर्दुहिता दक्षिणानामा तस्या आर्षम् । दानप्रशंसैषा । [भोजाय] भोजयतीति भोजोऽन्नदातोच्यते । कुत एतत् ? स इद् भोजो गृहवे ददात्यन्नकामाय चरते कृषाय[2] इति मन्त्रान्तरदर्शनात् । तस्य तदर्थम् अश्वं संमृजन्ति संस्कुर्वन्ति शालिहोत्रोपदिष्टेन निपुणाः परिचारकाः । कीदृशमश्वम् ? आशुम शीघ्रगति काम्बोजादिदेशजातम् । किं च भोजायास्ते कन्या कमनीया लावण्यतिशयविशेषेण शुम्भमाना वस्त्रालङ्कारादिना च दीप्यमाना, भोजस्येदं पुष्करिणीव पुष्करिणीं सदृशहृदया ह्लदानसहितं वेश्म गृहं परिष्कृतम् मनोरमणीयचित्रकर्मकुट्टिमशोभया सर्वतो विभूषितम् देवमाना प्रथमैकवचनस्य 'सुपां-सुलुक्[3]' इत्याकारः, देवमानम् इव चित्रम् विचित्रमाश्चर्यभूतम् । अल्पमिदमुक्तम् यत् किञ्चित् दुर्लभं जगति भद्रमस्ति तस्य सर्वस्य भोजनं भोज इति ॥

—:०:—

अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य ।
अधा स वीरैर्दशभिर्वियूया यो मा मोघं यातुधानेत्याह[4] ॥९२॥

इति शपथः (२१) वसिष्ठस्यार्षम् । अत्रेतिहासमाचक्षते—विश्वामित्रप्रयुक्तः किल कश्चिद् राक्षसो मायावी वसिष्ठरूपेण वसिष्ठस्य पुत्रशतं जघान । ततो वसिष्ठ प्रत्यपवादशङ्काऽजायत । लोकापवादवज्रेणाभिहतः पुत्रवियोगशोकाग्निना संतप्यमानहृदयश्च वसिष्ठः प्रस्तुत[ापवाद] निवृत्तये पैजवनस्य राज्ञः समक्षं शपथं चकार । अद्य अस्मिन् काले मुरीय म्रियेयं यदि अहं यातुधानः पिशिताशनः अस्मि भवामि, यदि वायुः यदि वा अस्यायुः जीवितं [ततप] तपिर्नाशार्थः, नाशितवानहं पुरुषस्य यस्य कस्यचित् । अध अथशब्दपर्यायः स च हेतौ, यत एतदलीकं [ततः] सः सोऽपि वीरैः पुत्रैः दशभिर्वियूयाः पुरुषव्यत्ययः[5] वियूयात्, यौतिः पृथग्भावे वर्तते पृथग् भवेत् यो

---

१. ऋ० १०।१०७।१०॥ २. ऋ० १०।११७।३॥
३. अ० ७।१।३९॥ ४. ऋ० ७।१०४।१५॥
५. तुलना—"पुरुषव्यत्ययः—अधा स वीरैर्दशभिर्वियूयाः, 'वियूयादितिप्राप्ते" । महाभाष्य ३।१।८५॥

मा मां शुद्धात्मानं मोघं व्यर्थमेव यातुधानेत्याह यातुधानेत्येवमसूयन् तवाया (?) अक्षममाण आह । सोऽप्यहमिव हतपुत्रः पुत्रवियोगाग्निसंतप्यमानहृदयः शयीत इत्यर्थः ॥

—:०:—

प्रति॑ चक्ष्व॒ वि च॒क्ष्वेन्द्र॑श्च सोम जागृतम् ।
रक्षो॑भ्यो व॒धम॑स्यतम॒शनिं॑ यातु॒मद्भ्यः॑[1] ॥९३॥

इति शापः (२२) । वसिष्ठस्यार्षम् । वसिष्ठो राक्षसैरभिभूयमानो रक्षसामपनोदार्थमिन्द्रासोमावाह । प्रति चक्ष्व प्रति वचनं कुरु भक्षयेत्यर्थः । विचक्ष्व विशब्दो कुत्सायां द्रष्टव्यः, कुत्सितान्यपि वचनानि दुर्जनत्वाद्वद, दुर्जनस्य कटुवचनं शमनकरं न मदुवचनम्[2], तवापि लोक[ाप]वादत्वहेतु खलु सारूप्यमित्यादि (?) इन्द्रश्च चशब्दस्य कर्मोपसंग्रहत्वात्[3] त्वं चेति शेषः । हे सोम जागृतम् जागृ निद्राक्षये विनिद्रौ भवथ; रक्षोभ्यः रन्ध्रान्वेषणपराणि हि रक्षांसि, ततो विनिद्रौ रक्षोभ्यः; वधम् वध इति वज्रनाम[4] वज्रम् अस्यतम् असु क्षेपणे प्रक्षिपतन् अशनिम् [अशनि] सदृशं यातुमद्भ्यः पिशिताशिभ्यः, तादर्थ्ये चतुर्थ्येषा, निवृत्त्या चात्र प्रयोजनम्, मशकेभ्यो धूम इति यथा, रक्षांसि विनाशार्थमित्यर्थः ॥

—:०:—

इह मद एव मघवन्निन्द्र तेऽश्व इति । श्वः सुत्यां वा एषां ब्राह्मणानां तामिन्द्रायेन्द्राग्निभ्यां प्रब्रवीमि मित्रावरुणाभ्यां वसुभ्यो

---

१. ऋ० ७।१०४।२५॥

२. तुलना कार्या—

अहोप्रकृतिसादृश्यं श्लेष्मणोदुर्जनस्य च ।
मधुरैः कोपमायाति कटुकेनैव प्रशाम्यति ॥

प्रकृतिसादृश्यम्=स्वभावसाम्यम् । श्लेष्मणः=कफस्य । मधुरेण श्लेष्मणः पक्षे मधुरगुणोपेतेन द्रव्येण, दुर्जनपक्षे सुवचनैः । कटुकेन—श्लेष्मणः पक्षे कटुद्रव्येण, दुर्जनपक्षे कटुवचनेन ।

३. द्र०—निघ० १।४॥ ४. निघ० २।२०॥

रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोमपेभ्यो ब्रह्मन् वाचं यच्छ[1] ॥९४॥

[इति अतिप्रैषः] (२३) ..........नित्यामन्त्र..............गणे प्रयुज्यते। विश्वामित्रस्यार्षम् इह मद एव इहैव यज्ञे मद सोमपानादीनि ..............भूतेऽप्यहनि अद्य गत्वा देवलोकं भुक्तशय्यादिसंभोगः प्रथते पुनरेह्यस्मद् यज्ञमेव कीदृशस्य तव वसुमतः वसुप्रभृतिर्देवाः तद्वतः तैः सहितस्येत्यर्थः श्वः सुत्यां हे अग्नीत् इन्द्राय इन्द्राग्निभ्यां च समुच्छ्रिताभ्यां प्रब्रूहि मित्रावरुणादिभ्यश्च। हे ब्रह्मन् वाचं यच्छ वाचंयम आस्स्व॥

—०—

न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास[2] ॥९५॥

इति आचिख्यासा (२४)। आख्यातुमिच्छा आचिख्यासा। प्रजापतेः परमेष्टिनः परमर्षेरार्षम्। प्रलयादूर्ध्वं प्राग् जगत्सृष्टेर्याऽवस्था साऽनयर्चोच्यते। न मृत्युरासीत् मर्तॄणामभावात् मृत्युश्च नासीत अमृतम् जीवनमपि [न] नैवासीत प्राणिनामभावात्। तर्हि तस्मिन् काले न रात्र्याः नापि रात्रेः अह्न आसीत् प्रकेतः प्रज्ञानम्, इयं रात्रिरिदमहरिति। तथा च स्मरणम्—आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्[3] इति।

अथवा प्रकेतः प्रज्ञापयिताऽऽदित्यः, स ह्युदयास्तमयाभ्यां रात्र्यहनी विभजते। स नासीत्, प्रदर्शनार्थमिदं सर्वे च देवाः। आनीत् अन प्राणने प्राणितावत् केवलमित्यर्थः; अवातम् नाभिप्रदेशादुत्थितो यो वातो मुखनासिकाभ्यां निर्गच्छति तद्रहितम्, अलौकिकमेतत् प्राणनमित्यर्थः। स्वधया स्वधा शब्दोऽन्नवचनः[4] स्वधयाऽन्नेन तत्रैव शक्त्यात्मनावस्थितवद् इत्यर्थः। तदेकम् कारणमात्माख्यं ब्रह्म तस्मात् ह [ह] इति पदपूरणः [अन्यत्] अन्यत् शब्द 'आस' इत्यनेन संबध्यते। परः परं किं च च शब्दोऽप्यर्थे किमपि [न] आस न बभूव। तदेवैकमासीदित्यर्थः॥

—०—

१. आश्व० श्रौ० ६।११॥ मुद्रितो मन्त्रपाठो न व्याख्यानुसारी। व्याख्यानुसारी मन्त्रपाठो मृग्यः।
२. ऋ० १०।१२९।२॥ ३. मनु० १।५॥ ४. निघ० २।७॥

एता अश्वा आ प्लवन्ते ।। प्रतीपं प्रातिं सत्वनम् ।।
तासामेका हरिक्निका ।। हरिक्निके किमिच्छसि[1] ।। इत्यादि ।।९६।।

इति प्रलापः (२५)। असम्बद्धभाषणं प्रलापः। अत्रैवं श्रूयते—"एतशो नाम मुनिः तव सोमपानभावेनाग्नेरायुविनश्वरं ददर्श। तद्दर्शनोपजातानन्द-परितोषः सन्दृप्त इव पूर्वापरासम्बद्धं प्रालापीत्"[2]। एता अश्वा आप्लावन्ते कथं प्रतीपं प्रति स्रोतः, कीदृशं प्रातिसत्वनम् सत्वनशब्दः सत्त्रपर्यायः' सत्व-शब्दः प्राणिपर्यायः। प्रतिसत्वनस्य भावः प्रातिसत्वनं, क्रियाविशेषणमेतत्। प्रतिकूलैः सत्वैरपि सहैता अश्वा आप्लवन्ते इत्यर्थः। अथवा सत्वानो विमतो वाता उच्यन्ते प्रातिसत्वनं प्रतिवातमित्यर्थः। नाथाम्वां वाडवानामेका हरि-क्निका हरितवर्णतामाह। हरिक्निके किमिच्छसि इत्येवं रूपः प्रलापः ।।

—:०:—

किमयमिदमाहेति[3] ।।९७।।

इति व्रीडा=लज्जा (२६)। आहनस्यानामृचां प्रतिगरः। आहनस्याः सभ्येतरवादित्य ऋच उच्यन्ते। कुत एतत्? "अयं जीवो वै पुरुषो मेध्यो यथा......मस्या जायते" इति श्रुतेः। प्रतिप्रस्थाता प्रतिगृह्णाति किमयम-मिदमाह इति किमयं ब्राह्मणाच्छंसी सभ्येतररूपं वचनमाहेति व्रीडा मे जायत इत्यर्थः ।।

—:०:—

कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम ।।
को नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च[4] ।।९८।।

इति उपधावनम् (२७) उपधावानमाश्रय[ण]मित्यर्थः। अस्याः प्रथमं तावदाख्यानं प्रस्तूयते—"अजीगर्तो नाम ब्रह्मर्षिः सुवचसस्य सूनुः पुत्रदार-सहितो दुर्भिक्षे क्षुधया पीड्यमानो निरतिशयतपो महाभाग्ययुक्तः प्राधान्यात्

१. अथ० २।१२९।१—४।।
२. अनुपलब्धमूलमिदम् ।।
३. अनुपलब्धमूलमिदम् ।।
४. ऋ० १।२४।१.।।

प्रजापतिमेव देवानां मध्ये प्रथमं प्रार्थयते-कस्य नूनम्"[1] इति। [ कस्य ] "को वै नाम प्रजापतिः" इति क इति प्रजापतिरुच्यते, प्रजापतेः नूनम् नूनशब्दो निश्चयार्थः, निश्चयेन कतमस्य कं सुखं तदतिशयेन कर्त्तव्यं प्राणिनां येन तस्य अमृतानाम् अमरधर्माणां देवानां पितुरितिशेषः । मनामहे अर्चयतिकर्माऽयम्[2], अर्चयामः चारु शोभनं देवस्य दानादिगुणस्य नाम नमनेन प्रह्वत्वेन स्तवनं लक्ष्यते । निश्चयेन प्रजापतिमर्चयामः स्तुम इत्यर्थः अथवा मनामहे याच्ञाकर्माऽयं[3] याचामहे । किं प्रकरणसामर्थ्यादायुः । प्रजापतिमायुर्याचामहे इत्यर्थः ।[ कः ]प्रजापतिरस्माभिराराधितो नः अस्मान् मह्यै पृथिव्यै अदितये आक्षीणयै पुनर्दात् ददातु पृथिव्यां स्थापयतु इत्यर्थः । ततश्च पितरं दृशेयं च मातरं च दृशेयमित्यनुषङ्गः । मातृपितृगतः[4] स्नेहो मां बाधत इत्यभिप्रायः ॥

—:०:—

माता च॑ ते पि॒ता च ते॒ऽग्रं॑ वृ॒क्षस्य॑ रोहतः ।
प्रति॑ला॒मीति॑ ते पि॒ता ग॒भे मु॒ष्टिम॑तꣳसयत्[5] ॥९९॥

इति आक्रोशः (२८) । अश्वमेधे संज्ञप्तस्याश्वस्य समीपशायिनीं महिषीं होता क्रोशति । कुत एतत् ? अश्वमहिष्योर्मिथुनत्वदर्शनात् माता च ते पिता च ते तव संगत्य अग्रं उपरि वृक्षस्य वृक्षजस्य खट्वाफलकस्य [ रोहतः ] क्रीडतः। कथम् ? प्रतिलामीति ला दाने प्रददानि सुरतमिति ते पिता तव मातुः गभे गभशब्दो हृदयवचनः हृदये मुष्टिमतंसयत् तसि प्रक्षेपार्थः प्राक्षिपत् ।

---

१. एतेन सुवचसपुत्रस्याजीगर्तस्यार्षमिदमिति स्पष्टम् । ऐतरेयब्राह्मणे [७-४] तु—"स [आजिगर्तिः, शुनःशेपः] प्रजापतिमेवप्रथममुपससार कस्य नूनं कतमस्यामृतानामित्येतयर्चा" इत्युक्तम् तथा सति शुनःशेपस्यार्षमिदम् । तथैव च कात्यायनेनाप्यनुक्रान्तम् । द्र०—सर्वा० १।२४॥

अत्र विशेषस्तु वैदिकविमर्शनाम्नि ग्रन्थे 'क्या ऋषि वेद-मन्त्रों के रचयिता थे ?' इति प्राकृतभाषानिबद्धेऽस्मदीये लेखे द्रष्टव्यः । पृ० ४४४-४५१॥

२. निघण्टौ [३।१४] न पठ्यते । ३. निघ० ३।१९॥

४. अयं पूर्वपदेऽनङ् रहितः प्राचीनः प्रयोगः द्रष्टव्या अत्र 'मातृपितृसंयोगाच्च' (निरुक्त १४।६), 'मातृपितृभ्याम्' महा० शान्ति १२९।९; मातृपितृवत् (महा० शान्ति० १३८।८४) इत्यादयः प्रचीनाः प्रयोगाः । ५. यजु० २३।२४ ॥

अथवा आद्यन्तविपर्ययः भगे मुष्टिम् मुष्टिशब्देन मोहनहेतुः शेपोऽभिधीयते तथा मुष्टिमोहनाद् वा इति निरुक्तम्[1]। मुष्टिं प्रजननम् अतंसयत् प्रक्षिप्तवान्, न केवलं युवामेव मिथुनभावं प्रपद्येथे[2] इत्यर्थः ॥

—:o:—

वितंतौ किरणौ द्वौ तावा पिनष्टि पूरुषः ।
न वै कुमारि तत्तथा यथा कुमारि मन्यसे[3] ॥१००॥

इति प्रवल्हिका (२६) । अन्तर्हितार्था प्रवल्हिका उच्यन्ते । दुन्दुभिमाहननाभ्यामाघ्नन्त [म्] मैथुनकर्मणि वर्तमानमिवोत्प्रेक्षन्ते । वितती विस्तीर्णौ किरणौ प्रक्षेपणसाधनभूतौ द्वौ तौ प्रसिद्धौ योनेरभितौ मांसलौ प्रदेशौ आपिनष्टि आभिमुख्येन निर्घर्षति पुरुषः स्वेदक्लिन्नगात्रः । एवमुत्प्रेक्षायामपरमाह न वै वैशब्दोऽवधारणार्थः । हे कुमारि लुप्तोपममेतत् मन्दप्रज्ञत्वात् कुमारिसदृशी तत् तथा यथा कुमारीसदृशं मन्यसे मैथुनम् मैथनकर्मणि वर्तमानमिति किं पुनस्तं दुन्दुभिमाहननाभ्यां हरन्तीत्यर्थः ॥

—:o:—

किं तें कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तंपन्ति घर्मम् ।
आ नो भर प्रमंगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः[4] ॥१०१॥

इति परिवादः (३०) । परि (?, पर)गतदोषाविष्करणपूर्वो वादः परिवाद उच्यते । विश्वामित्रो यज्ञार्थमिन्द्रं याचते । किं ते तव कृण्वन्ति किं

---

१. निघ० ६।१ ॥

२. अयं मन्त्रः शतपथे त्वेवं व्याख्यायते—"माता च ते पिता च त इति । इयं वै माताऽसौ पिताभ्यामेवैनमग्रं स्वर्गलोकं गमयत्यग्रं वृक्षस्य रोहत इति श्रीर्वै राष्ट्रस्याग्रꣳश्रियमेवैनꣳराष्ट्रस्याग्रं गमयति प्रतिलामीति ते पिता गभे मुष्टिमतꣳसयदिति विड् वै गभो राष्ट्रं मुष्टी राष्ट्रमेव विश्याहन्ति तस्माद् राष्ट्री विशं घातुकः" ॥ इति । शत० १३।२।६।७॥

अस्य एतादृशां चान्येषां मन्त्राणां शतपथानुगतः सम्यगर्थः; स्वामिदयानन्दसरस्वतीप्रणीतायामृग्वेदादिभाष्यभूमिकायां द्रष्टव्यः ।

३. अथ० २०।१३३।१॥ ४. ऋ० ३।५३।१४॥

कुर्वन्ति कीकटेषु गावः, कीकटाः किंकृताः[1] किमर्थमत् उत्पादिताः, सन्त इति। किमः करोतेश्च वर्णव्यापत्त्यादिना कीकटाः। अथवा क्रियाभिरिति दीना कीकटा उच्यन्ते क्रियाशब्दादुत्तरपदमिति भेदः। तेषां गावः। कुतः? यतः नाशिरं दुह्रे आशिरमिति कारणस्य कार्यव्यपदेशः। तत्कारणभूतं पयो न दुहन्तीत्यर्थः। किं च न तपन्ति घर्मम् तपिरत्रान्तर्णीतण्यर्थः; न तापयन्ति नोऽवलयन्ति धर्मं, प्रवर्ग्ये विनियोगं [न] गच्छन्तीत्यर्थः। यथा तैस्ते [षां] प्रयोजनं नास्त्येवं प्रमगन्दस्य वेदः आ नो भर अस्माकमाहर। प्रमगन्दस्य मगन्दः कुसीदी मां समेष्यति वृद्धो धनराशिरिति बुद्धया यो ददाति स वार्धुषिको मगन्द उच्यते। तस्यापत्यं प्रमगन्दः, प्र अपत्यार्थे प्रस्कण्व[2] इति यथा, प्रमगन्दको वा प्रकर्षेणाश्मानमेव यो मादयति नातिथ्यादीन् नास्तिकः स प्रमगन्दः, तस्य वेदो धनम्। किं च नैचाशाखम् नीचा निर्गतास्त्यक्ता ऋचादयः शाखा उच्यन्ते नीचाशाखाः, तेषां स्वभूतं नैचाशाखम्, तदपि हे मघवन् रन्धय रन्धतिर्वशगमने नः अस्माकम्, तदप्यस्मद्वशं गमय। तथा ह्यवस्थितं धर्मवचनं—"योऽसाधुभ्योऽर्थमादाय"[3] इत्यादि। अतो यष्टॄणामस्माकमयष्टॄणां धनमाहर इत्याशास्महे॥

—:o:—

यदि॑ क्षि॒तायु॒र्यदि॑ वा॒ परे॑तो॒ यदि॑ मृ॒त्योर॑न्ति॒कं नी॑त ए॒व।
तमा ह॑रामि॒ निर्ऋ॑तेरु॒पस्था॒दस्पा॑र्षमेनं श॒तशा॑रदाय[4] ॥१०२॥

इति परित्राणम् (३१)। परित्राणं परिपालनं। यक्ष्मनामर्षिर्यक्ष्मगृहीतमाह। यदि क्षितायुः यदि क्षीणायुः यदि वा परेतः पुरागतः कथमपि। यदि वा मृत्योः देवताया अन्तिकम् समीपं नीत एव एव शब्दोऽप्यर्थे नीतोऽपि तमाहरामि निर्ऋतेरुपस्थात् प्रलयाधिदेवताया अङ्कप्रदेशादप्याहृ तस्य अस्पार्षम् रक्षामि [एनम्] शतशारदाय शतसंवत्सराय जीवसे शतसंवत्सरं जीवितुमित्यर्थः॥

॥ इति वाररुचे निरुक्तसमुच्चये चतुर्थः कल्पः॥

---

१. निरु० ६।३२॥
२. द्र०—निरु० ३।१७॥
३. मते० ११।१६॥
४. ऋ० १०।१६१।२॥

कल्पैश्चतुर्भिर्व्याख्यातं सारभूतमृचां शतम्[१] ।
सहस्रं पञ्चशतं श्लोकेनानुष्टुभेन कृतम् ॥
सहस्रं पञ्चशतं संख्या ग्रन्थस्य प्रकीर्तिता ।
विस्तरभीत्या संक्षिप्तं तात्पर्यार्थविबुद्धये ॥
एवं निरुक्तमालोक्य मन्त्राणां विवृतं शतम् ।
उक्तानुक्तदुरुक्तानि चिन्तयन्त्विह पण्डिताः ॥

भगवते यास्काय नमः ॥

ओं नमो नारायणाय नमः शिवाय ॥[२]

—:o:—

१. अस्मिन् ग्रन्थे (१०२) द्व्युत्तरशतं मन्त्रा व्याख्याताः । अत्र शतमिति वचनं सामान्यपरम् ।

२. इतोऽग्रे हस्तलेख बृहद्देवता ग्रन्थस्थाः षट्त्रिंशद्विधमन्त्रनिदर्शकाः षड्विंशति (१।३५।६०) श्लोकाः समुल्लिखिताः ।

# प्रथमं परिशिष्टम्

## निरुक्त-समुच्चये प्रमाणत्वेनोपन्यस्तानां ग्रन्थानां ग्रन्थकर्तॄणां च नामानि विशिष्टानि च कानिचित् पदानि



* अत्र कानिचिदेव पदानि सविभक्तिकानि विशेषाभिप्रायद्योतनाय पठितानि, अन्यानि तु प्रातिपदिकमात्राणि।

† अत्र निर्दिश्यमाना संख्या अस्य संस्करणस्य पृष्ठसंख्या ज्ञेया।

—:o:—

# द्वितीयं परिशिष्टम्

## निरुक्तसमुच्चये व्याख्यातानां मन्त्राणां

## वर्णानुक्रमेण सूचीपत्रम्



ॐ मन्त्रप्रतीकानन्तर निर्दिष्टा संख्या अस्य संस्करणस्य पृष्ठसंख्या ज्ञेया ।

—:०:—

# रामलाल कपूर ट्रस्ट द्वारा

## प्रकाशित वा प्रसारित प्रामाणिक ग्रन्थ

### वेद विषयक ग्रन्थ

१. **ऋग्वेदभाष्य**—(संस्कृत हिन्दी वा ऋग्वेदादिभाष्यभूमिका सहित)–प्रतिभाग सहस्राधिक टिप्पणियां, १०–११ प्रकार के परिशिष्ट व सूचियां। प्रथम भाग ३५–००, द्वितीय भाग ३०–००, तृतीय भाग ३५-००।

२. **यजुर्वेदभाष्य-विवरण**—ऋषि दयानन्दकृत भाष्य पर पं० ब्रह्मदत्त जिज्ञासु कृत विवरण। प्रथम भाग अप्राप्य है। द्वितीय भाग मूल्य २५-००

३. **तैत्तिरीय-संहिता**—मूलमात्र, मन्त्र-सूची-सहित। ४०-००

४. **अथर्ववेदभाष्य**—श्री पं० विश्वनाथ जी वेदोपाध्यायकृत। १४-१७ काण्ड ३४–००, १८–१९ वां काण्ड २०–००, बीसवां काण्ड २०-००,। ११-१३ काण्ड छप रहे हैं।

५. **माध्यन्दिन**—(यजुर्वेद) पदपाठ—शुद्ध संस्करण। मूल्य २५-००

६. **गोपथ ब्राह्मण (मूल)**—सम्पादक श्री डा० विजयपाल जी विद्यावारिधि। अब तक प्रकाशित सभी संस्करणों से अधिक शुद्ध और सुन्दर संस्करण। मूल्य ४०-००

७. **वैदिक-सिद्धान्त-मीमांसा**—युधिष्ठिर मीमांसक लिखित वेद-विषयक १७ विशिष्ट निबन्धों का अपूर्व संग्रह। विशिष्ट संस्करण मूल्य ३०-००

८. **ऋग्वेदानुक्रमणी**=वेङ्कट माधवकृत। इस ग्रन्थ में स्वर छन्द आदि आठ वैदिक विषयों पर गम्भीर विचार किया है। व्याख्या-कार—श्री डा० विजयपाल जी विद्यावारिधि। उत्तम-संस्करण ३०-००, साधारण २०-००

९. **ऋग्वेद की ऋक्संख्या**—युधिष्ठिर मीमांसक २-००

१०. **वैदिक-छन्दोमीमांसा**—युधिष्ठिर मीमांसक। नया संस्करण १५-००

११. **यजुर्वेद का स्वाध्याय तथा-पशुयज्ञ-समीक्षा**—लेखक पं० विश्वनाथ वेदोपाध्याय। बढ़िया जिल्द २०-००, साधारण १६-००।

१२. **वैदिक-पीयूष-धारा**—लेखक श्री देवेन्द्रकुमारजी कपूर। चुने हुए ५० मन्त्रों की प्रतिमन्त्र पदार्थ पूर्वक विस्तृत व्याख्या तथा अन्त में भावपूर्ण गीतों से युक्त। उत्तम संस्करण १५-००, साधारण १०-००।

## कर्मकाण्ड-विषयक ग्रन्थ

१३. **बौधायन-श्रौत-सूत्रम्** (दर्शपूर्णमास प्रकरण)—भवस्वामी तथा सायण कृत भाष्य सहित (संस्कृत) ४०-००

१४. **दर्शपूर्णमास-पद्धति**—पं० भीमसेन भाषार्थ सहित। २५-००

१५. **कात्यायनगृह्यसूत्रं**—मूलमात्र १५-००

१६. **संस्कार-विधि**—शताब्दी संस्करण, ४६० पृष्ठ, सहस्राधिक टिप्पणियां, १२ परिशिष्ट। मूल्य लागतमात्र १२-००, राज-संस्करण १५-००। सस्ता संस्करण मूल्य ५-२५; अच्छा कागज सजिल्द ७-५०।

१७. **वैदिक-नित्यकर्म-विधि**—सन्ध्यादि पांचों महायज्ञ तथा बृहद् हवन मन्त्रों के पदार्थ तथा भावार्थ व्याख्या सहित। यु० मी० ३-००, सजिल्द ४-००

## शिक्षा-निरुक्त-व्याकरण-विषयक ग्रन्थ

१८. **वर्णोच्चारण-शिक्षा**—ऋषि दयानन्द कृत हिन्दी व्याख्या सहित। ०-६०

१९. **शिक्षासूत्राणि**—आपिशल-पाणिनीय-चान्द्र शिक्षा-सूत्र २-५०

२०. **निरुक्त-श्लोकवार्त्तिकम्**—केरलदेशीय नीलकण्ठ गार्ग्यविरचित एक मात्र मलयालम लिपि में ताडपत्र पर लिखित प्रति के आधार पर मुद्रित। आरम्भ में उपोद्घात रूप में निरुक्त-शास्त्र-विषयक संक्षिप्त ऐतिह्य दिया गया है (संस्कृत)। सम्पादक—डा० विजयपाल विद्यावारिधिः। उत्तम कागज, शुद्ध छपाई तथा सुन्दर जिल्द सहित। १००-००

२१. **निरुक्त-समुच्चय**—आचार्य वररुचि विरचित (संस्कृत)। सं०—युधिष्ठिर मीमांसक। १५-००

२२. **अष्टाध्यायी**—(मूल) शुद्ध-संस्करण। ३-००

२३. **धातुपाठ**—धात्वादिसूची सहित, शुद्ध संस्करण। ३-००

२४. **अष्टाध्यायीशुक्लयजुः प्रातिशाख्ययोर्मतविमर्शः** (संस्कृत)—डा० विजयपाल विद्यावारिधि। ५०-००

२५. **वामनीयं लिङ्गानुशासनम्**—स्वोपज्ञ-व्याख्यासहितम्। ८-००

२६. अष्टाध्यायी-भाष्य—(संस्कृत तथा हिन्दी) श्री पं० ब्रह्मदत्त जिज्ञासु कृत। प्रथम भाग २४-००, द्वितीय भाग २०-००, तृतीय भाग २०-००।

२७. संस्कृत पठन-पाठन की अनुभूत सरलतम विधि—लेखक—श्री पं० ब्रह्मदत्त जिज्ञासु। प्रथम भाग १०-००; द्वितीय भाग १०-००।

२८. The Tested Easiest Method of Learning and Teaching SansKrit (First BooK)—यह पुस्तक श्री पं० ब्रह्मदत्त जी जिज्ञासु कृत 'विना रटे संस्कृत पठन-पाठन की अनुभूत सरलतम विधि' भाग १ का अंग्रेजी अनुवाद है। अंग्रेजी भाषा के माध्यम से पाणिनीय व्याकरण में प्रवेश करने वालों के लिये यह आधिकारिक पुस्तक है। कागज और छपाई सुन्दर, सजिल्द। मूल्य २५-००

२९. महाभाष्य-हिन्दी व्याख्या, यु० मी०। प्रथम भाग ५०-००, द्वितीय भाग २५-००, तृतीय भाग २५-००

३०. उणादिकोष—ऋ० द० स० कृत व्याख्या, तथा पं० यु० मी० कृत टिप्पणियों, एवं ११ सूचियों सहित। अजिल्द १०-००, सजिल्द १२-००

३१. दैवम् पुरुषकारवार्त्तिकोपेतम्—लीलाशुकमुनि कृत। १०-००

३२. भागवृत्तिसंकलनम्—अष्टाध्यायी की प्राचीन वृत्ति। ६-००

३३. काशकृत्स्न-धातु-व्याख्यानम्—संस्कृत रूपान्तर। यु० मी० १५-००

३४. संस्कृत-धातुकोश—पाणिनीय धातुओं का हिन्दी में अर्थ निर्देश। सं० युधिष्ठिर मीमांसक। १०-००

## अध्यात्म-विषयक ग्रन्थ

३५. आर्याभिविनय (हिन्दी)—स्वामी दयानन्द। गुटका सजिल्द मूल्य ४-००

३६. Aryabhivinaya—English translation and notes (स्वामी भूमानन्द) दोरङ्गी छपाई। अजिल्द ४-००, सजिल्द ६-००

३७. विष्णुसहस्रनाम-स्त्रोत्रम् (सत्यभाष्य सहितम्)—पं० सत्यदेव वासिष्ठ कृत आध्यात्मिक वैदिक भाष्य (४ भाग)। प्रति भाग १५-००

३८. **श्रीमद्भगवद्-गीता-भाष्यम्**—श्री पं० तुलसीराम स्वामी ६-०० ।

## नीतिशास्त्र-इतिहास-विषयक ग्रन्थ

३९. **शुक्रनीतिसार**—व्याख्याकार श्री स्वा० जगदीशानन्द जी सरस्वती। विस्तृत विषय सूची तथा श्लोक-सूची सहित। उत्तम कागज,सुन्दर छपाई तथा जिल्द सहित। मूल्य ४५ ००

४०. **सत्याग्रह-नीति-काव्य**—आ० स० सत्याग्रह १९३९ ई० में हैदराबाद जेल में पं० सत्यदेव वासिष्ठ द्वारा विरचित। हिन्दी व्याख्या सहित। ५-००

४१. **संस्कृत व्याकरणशास्त्र का इतिहास**—युधिष्ठिर मीमांसक कृत। अप्राप्य। नया संस्करण छप रहा है।

४२. **संस्कृत व्याकरण गणपाठ की परम्परा और आचार्य पाणिनि**—लेखक-डा० कपिलदेव शास्त्री एम० ए०। सजिल्द १५-००

४३. **ऋषि दयानन्द के पत्र और विज्ञापन**—इस बार इस में ऋषि दयानन्द के अनेक नये उपलब्ध पत्र और विज्ञापन संगृहीत किये गए हैं। इस वार यह संग्रह चार भागों में छप रहा है। प्रथम दो भागों में ऋ० द० के पत्र और विज्ञापन आदि संगृहीत हैं। तीसरे और चौथे भाग में विविध व्यक्तियों द्वारा ऋ० द० को भेजे गये पत्रों का संग्रह है। प्रथम भाग—३५-००, दूसरा भाग ३५-००, तीसरा भाग ३५-००, चौथा भाग छप रहा है।

४४. **विरजानन्द-चरित**—लेखक=पं० भीमसेन शास्त्री एम० ए०। नया परिवर्धित और शुद्ध संस्करण। मूल्य ३-००

४५. **ऋषि दयानन्द और आर्यसमाज की संस्कृत-साहित्य को देन**—लेखक-डा० भवानीलाल भारतीय एम० ए०। सजिल्द १५-००

## दर्शन-आयुर्वेद-विषयक ग्रन्थ

४६. **मीमांसा-शाबर-भाष्य**—आर्षमतविमर्शिनी हिन्दी व्याख्या। व्याख्याकार—युधिष्ठिर मीमांसक। प्रथम भाग—मूल्य ४०-००; द्वितीय भाग ३०-००; तृतीय भाग ५०-००; चौथा भाग यन्त्रस्थ।

४७. **नाडी-तत्त्वदर्शनम्**—श्री पं० सत्यदेव जी वासिष्ठ। ३०-००

**रामलाल कपूर ट्रस्ट**

बहालगढ़, जिला—सोनीपत (हरियाणा) १३१०२१

# ट्रस्ट के उद्देश्य

**प्राचीन-वैदिक साहित्य का अन्वेषण, उसकी रक्षा तथा प्रचार तथा भारतीय संस्कृति, भारतीय शिक्षा, भारतीय विज्ञान और चिकित्सा द्वारा जनता की सेवा**

---

## रामलाल कपूर ट्रस्ट, के प्रकाशनों के प्राप्ति स्थान

१—रामलाल कपूर एण्ड संस पेपर मर्चेण्ट्स, गुरुबाजार अमृतसर।
२— „ „ „ „ „ „ नई सड़क, देहली।
३— „ „ „ „ „ „ विरहाना रोड़ कानपुर।
४— „ „ „ „ „ „ ५१, सुतार चाल, बम्बई।

**रामलाल कपूर ट्रस्ट जी० टी० रोड़, बहालगढ़ (सोनीपत) हरयाणा**

**विस्तृत सूचीपत्र विना मूल्य मंगवावें—**

---

## —: वेदवाणी :—

वैदिक साहित्य, वैदिक धर्म और वैदिक सभ्यता का प्रचार करनेवाली एकमात्र उत्कृष्ट मासिक-पत्रिका। प्रतिवर्ष वेद-सम्बन्धी अनुसन्धानपूर्ण लेखों से युक्त विशालकाय विशेषाङ्क प्रकाशित होता है। वार्षिक चन्दा १२-०० विदेश में २५-००।

**वेदवाणी कार्यालय, बहालगढ़, सोनीपत (हरयाणा) १३१०२१**